चानन्दकथाकर्णनरसोत्सुकेन भूभृता पुनस्तन्मु(स्वमु?)खेनैव स्फुटीकृतं(त्य?) वत्सराजनिवेदितं वृत्तमादिष्टः प्रबन्धपठनाय सर्वतोऽपि कविभ्यो गृहीतानुमतिरुन्मुच्य बन्धात्पुस्तकमादौ भारतीमवनम्य ततः पूर्वकवीननुध्यातवान् ।

वागीश्वरं हन्त र( भ )जेऽभिनन्द-
मर्थेश्वरं वाक्पतिराजमीडे ।
रसेश्वरं स्तौमि च कालिदासं
बाणं तु सर्वेश्वरमानतोऽस्मि ॥

इत्यभिप्रेतां कविचतुष्टयीमनुस्मृत्य वाचयितुमारब्धवान् । क्रमेण( कतिपयैः) दिवसैस्तं सर्वमपि श्रावयामास । वाचितप्रबन्धश्च परितुष्टेन रभसादुचितमात्मनो गुणानाम्, अनुरूपं च कविक्लेशस्य, सदृशं च कविताव्युत्पत्तिकौशलस्य, योग्यं च कथारसविभूतेः, यथावदतिमनोरथैर्वस्तुभिर्महता संमानडम्बरेण पूजितो राज्ञा सर्वैश्च तैः सभावर्त्तिभिः साधुकारितो लोकैरभिनन्दितः कविभिः(प्र)शंसितो विशिष्टैरालिङ्गितस्तु मित्रैराजगाम गृहम् । आगतश्च गृहमकृतदिव्यायतनादिकीर्त्तनमकिंचनस्य धनमजातपुत्रस्य सूनुरनाप्तकामिनीसंभोगस्य रतिसुखमनार्जितयशसो यशश्चेत्यादिभिश्चतुर्वर्गफलो निबन्ध इति तया प्रबन्धश्रिया ज्ञापितसंसारफल इव सफलीकृतमनुष्यजातिरिव दृष्टादृश्य इव लब्धालभ्य इव सिद्धासाध्य इव च त्रिभुवनाधिपत्यलाभाधिकां निर्वृतिमवाप ।

प्रबन्धस्य च प्रचारमुपरिष्टाच्चिन्तयन् विनयोपरचितकरसंपुटाञ्जलिरुवाच सर्वतः सर्वान्—

वृत्तेभ्यः किल किं भयं न च भयं तेभ्योऽपि ये सांप्रतं
वर्त्तन्ते कवयः प्रबन्धकरणक्लेशोपलब्धश्रमाः ।
अन्येभ्यश्चकितोऽस्मि वृत्तकवितामात्रेण भाङ्कारिणो
ये तेषामभितोऽप्यतत्वविदुषां श्रृङ्गे न पुच्छे ग्रहः ॥

ततश्च—

ये तावत्किल कृत्स्नवाङ्मयविदस्ते सन्तु दूरं बुधा
ओमित्यक्षरमात्रकेण विदुषामप्येष बद्धोऽञ्जलिः ।
कीदृश्यस्तु कथेयमत्रसकलैःसत्कृत्यकृ..................

..........................................................कश्चि-
दप्रार्थिता अपि परोपकृतौ रतास्ते ।

ते सर्वकालमियदेव परं भणामि
यावन्न कल्पशतमभ्युदय............ ॥
.................................त्ति नन्दन्तु ते
ये कुर्वन्त्यजरामरान्नरपतीन्काव्येषु सूक्तामृतैः ।
तेऽपि क्ष्मापतयो जयन्ति जगतामारक्षिभिर्यैरसौ
भूर्भास्वद्भुजवज्रदण्डदलितानिष्टै( स्स )मानन्दति ॥
अपि जयति जगत्यामि( ष्ट )देवः पिनाकी
जयति स च पिनाकिन्युज्ज्वला यस्य भक्तिः ।
जयति जयति चासावत्र चम्पूकथायां
शिवनुतिपदपू( र्णा ) हन्त सारस्वतश्रीः ॥

॥ इति कायस्थकविसोड्ढलविनिर्मितायामुदयसुन्दरीकथायां
सर्वानन्दो नाम सारस्वतश्रीपदाङ्कोऽष्टम-
उच्छ्वासकः ॥

॥ समाप्तेयमुदयसुंदरीकथाचम्पूः ॥

श्रीः ॥

# श्लोकानुक्रमणिका ॥

# Index of proper names occurring in the Udayasundarîkathâ.

# Index of Geographical names occurring in the Udayasundarikathâ.

# शुद्धपत्रम् ।



| पृ. | प. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | ८ | स्सूत्रम् | श्छिद्रं (?) |
| २ | १८ | करटीन्दु | करटीन्द्र |
| ३ | २३ | तया | तयाऽद्य |
| ८ | २६ | वरूथिनी | वरूथिनीको |
| ८ | २९ | मुखा | सुखा |
| ९ | २१ | सुधासमु | समु |
| ,, | २२ | मधुरया | सुधामधुरया |
| १० | ५ | कर्तुं | कर्तु |
| ,, | १३ | निवेशितेण | निवेशितेन |
| ११ | ९ | विलया | वलया |
| १८ | १६ | कवीन्द्रेड्ढे | कवीन्द्रेढ्ढि |
| २० | ११ | मिवतिष्ठ | मवतिष्ट |
| २३ | ३ | काम | क्राम |
| २५ | ५ | जलता | ज्यालता |
| २८ | २८ | मत्यद्भत | मत्यद्भुत |
| ३४ | ४ | गतो | गमितो |
| ,, | २४ | एब । | एव |
| ,, | ,, | पीडा | पीडा । |
| ,, | २७ | द्वाःस्था | द्वाःस्थो |
| ,, | ,, | पति | पती |
| ,, | ३० | मेषा | सेवा |
| ३७ | १२ | मुन्निवे | सन्निवे |
| ३७ | २३ | नोदित | नोऽति |
| ३८ | २१ | निवासः । | निवासः |
| ,, | ,, | पञ्जरके | पञ्जरके । |
| ३९ | ८ | शिरः | सर |
| ३९ | १६ | भूमिरुल्लसिता | भूमिः, उल्लसता |
| ,, | १७ | वती शिरः | वतीशिरः |
| ,, | ,, | पांसुर्भ्रूलता | पांसुः, लुठता |
| ,, | २२ | स्वयं | स्मयं |
| ४४ | १२ | मूर्द्धि | मूर्द्धि (न) |
| ५९ | ११ | मण्डा | मण्ड |
| ६० | १४ | धन | घन |
| ६० | २० | शालाका | शलाका |

| पृ. | प. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६५ | २८ | द्भूर्ति | द्भूर्तिं |
| ६६ | २४ | मिब | मिव |
| ७२ | ४ | मातुं– | मातुं |
| ७६ | ८ | । | , |
| ८२ | २९ | दर्शिको | दशको |
| ९१ | ९ | रावतो | रावृतो |
| ९७ | २० | बली | वली |
| १०० | ११ | शि | शि– |
| १०२ | २६ | मया; | मया |
| १०८ | २२ | शक्ति | शुक्ति |
| ” | ” | वृक्ष | ऋक्ष |
| १३७ | १४ | रूर्प | रूप– |
| ११४ | १८ | ( छां ? ) | |
| १२४ | १९ | झंपा | झम्पा |
| ” | ” | ( मनवष्टम्भमपतत् ? ) | |
| १४४ | ५ | ह्यय | हृय |
| १५१ | १४ | इत्तुलके | श्रुल्के |
| ” | २८ | र्योगि | गोगि |
| ” | ” | मा (सू ?) तुना | मातुलेन |
| १५४ | १८ | मासा | भासा |
| १५५ | २४ | भटः | भट्टः |